मार्च-अप्रैल २००४ ईसवीयाब्दः ओ३म् R.N.I. Regd. No. UPBIL / 1998 / 1485

ज्वालापुरीय - गुरुकुलमहाविद्यालयस्य सचित्रं मासिकं मुखपत्रम्

# भारतोदयः

'भारते भातु भारती'

## समुद्रदेव !

- डॉ० अनन्तराममिश्रः 'अनन्तः'
गोला गोकर्णनाथ, खीरी - २६२८०२ (उ०प्र०)

(१)

विष्णोरनन्तशयनं धृतदुग्धपूरं
कन्याकुमारितपसा कृतकृत्यवप्रम्।
रामेश्वरे च रघुनाथसन्नाथसेतुं
वन्दे समुद्रमनघं बहुतीर्थतीरम् ।।

(२)

पीताब्धिपीतमपि नित्यमपान्निधानं
श्रेण्यं वरेण्यमखिलेषु सरोवरेषु।
वाणिज्यसंघटनदक्षसुपोतपृष्ठं
भीमं च रम्यममलं प्रणमामि सिन्धुम् ।।

(३)

आकाशकल्पशितवर्णमपारपारं
कल्लोललोलमनिशं कृतघोरघोषम्।
रत्नाकरं वननिधिं वनपूर्णवेलं
सिन्धुं नमामि प्रयतोऽखिलसिन्धुकान्तम् ।।

(४)

लावण्यकेन्द्रममृतप्रदमन्तहीनं
पद्मालयं रहितपद्ममनन्तवीर्यम्।
सारस्वतं तु रजनीपतिजन्महेतुं
चञ्चत्तरङ्गशिखरं प्रभजामि सीरम् ।।

(५)

विन्ध्यायमानमिव तुङ्गतरङ्गशैलैः
संधूयमानमचिरं हि विलोडनेन।
संस्तूयमानममरैरसुरैः मनुष्यैः
फेनायमानमुदधिं प्रणमामि नित्यम् ।।

(६)

आपूर्यमाणमखिलं सततं सरिद्भिः
संकृष्यमाणमथ पार्वणचन्द्रपादैः।
लेलायमानमसिनेव तरङ्गभङ्गैः
आबध्यमानमुरसा जलधिं भजामि ।।

[शेषांशः द्वितीयपृष्ठे]

दूरभाष - ०१३३४ २५४२९५ २५५३७७ (ज्वालापुरम्) तारगृहम् - महाविद्यालयः (ज्वालापुरम्)

# भारतोदयः

संस्कृत-मासिकपत्रम्

वर्षम् - ९४ अङ्कौ - ९, १०

सम्पादकः
डॉ. हरिगोपालशास्त्री
व्याकरणाचार्यः
एम्.ए., पीएच्.डी.
राष्ट्रपति-पुरस्कृतः



सह-सम्पादकः
डॉ. केशवप्रसाद उपाध्यायः
साहित्याचार्यः
एम्.ए., पीएच्.डी.



प्रबन्ध-सम्पादकः
डॉ. अजयकौशिकः
साहित्याचार्यः
एम्.ए., पीएच्.डी.



प्रकाशकः
गुरुकुलमहाविद्यालयः ज्वालापुरम्
हरिद्वारम् - २४९४०५
(उत्तराञ्चल-प्रदेशः)



शुल्क-विवरणम्
प्रत्यङ्कम् - ५/-
वार्षिकम् - ५०/-
आजीवनम् - ५००/-

## विषयानुक्रमणिका



[प्रथमपृष्ठस्य शेषांशः]

### समुद्रदेव !.....

(७)

मुक्ताप्रवालदरशुक्तिविकीर्णवेलम्, और्वाग्निना सतततप्तमपि प्रशान्तम् ।
देवं समुद्रमहमद्य सभक्ति वन्दे, संसारसिन्धुतरणाय विहाय मोहम् ।।

(८)

दृष्ट्वाङ्गनां सरसरूपमतीं समक्षं, चित्तं यथा हि दयितस्य चलत्वमेति ।
आलोक्य खे तु शरदिन्दुमनन्यकान्तिं, लोलं तथा भवति तेऽम्बु तरङ्गमालि ।।

(९)

पूर्णेन्दुबिम्बनिचयः सलिले त्वदीये, सिन्धो यदा हि विलसन्ति तदाऽनुमन्ये ।
पद्मानि भान्ति चपलेऽपि जले रजन्यां, किं वाऽप्सरो मृदुमुखानि समुल्लसन्ति ।।

(१०)

सूर्योदये किरति ते वरवारिमध्ये, छायामिषेण तरलीकृतहेमराशिः ।
रक्ताब्जवृन्दममितं परिशोभते किं, प्राचीवधूकरकृतं शुभदीपदानम् ।।

[क्रमशः]

ओ३म्

ज्वालापुरीय-गुरुकुलमहाविद्यालयस्य सचित्रं मासिकं मुखपत्रम्



भविक-भरित-भारतोदयोऽयं भव-विभवोद्भवभावनाभिलाषी ।
भगवति भुवि भक्ति-भावभाजां भव-भय-भाव-भरं भ्रियान्नभूमन् ।।

निशम्यतां लेख-ललाम-सञ्चय-प्रकाशने येन कृतोऽतिनिश्चयः ।
गृहीतसद्धर्मविशेषसंश्रयश्चकास्ति सोऽयं भुवि 'भारतोदयः' ।।

वर्षम्- ९४ | चैत्र-वैशाख २०६१ विक्रमाब्दः, मार्च-अप्रैल २००४ ईसवीयाब्दः | अङ्को- ९, १०



# श्रुति-सुधा



**ओ३म् अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः।**
**देवो देवेभिरागमत् ।।** — ऋग्वेद १/१/५

**पदार्थः -**

(अग्निः) परमेश्वरो भौतिको वा। (होता) दाता ग्रहीता द्योतको वा। (कविक्रतुः) कविः सर्वज्ञः क्रान्तदर्शनो वा। करोति (कारयति) येन वा स क्रतुः, कविश्चासौ क्रतुश्च सः। 'कविः क्रान्तदर्शनो भवति कवतेर्वा। (निरु. १२/१३)' यः सर्वविद्यायुक्तं वेदशास्त्रं कवते उपदिशति स कविरीश्वरः। क्रान्तं दर्शनं यस्मात् स सर्वज्ञो भौतिको वा क्रान्तदर्शनः। 'कृञः कतुः (उ. १/७६)' अनेन कृञो हेतु - कर्तरि (करणे) वा कतुः प्रत्ययः। (सत्यः) सन्तीति सन्तः, सद्भ्यो हितः तत्र साधुर्वा। 'सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा (निरु. ३/१३)' (चित्रश्रवस्तमः) चित्रमद्भुतं श्रवः श्रवणं यस्य, सोऽतिशयितः। (देवः) स्वप्रकाशः प्रकाशकरो वा। (देवेभिः) विद्वद्भिर्दिव्यगुणैः सह वा। (आ) समन्तात्। (गमत्) गच्छतु प्राप्तो भवति वा। लुङ् प्रयोगोऽड्भावश्च ।।५।। अत्र श्लेषालङ्कारः।

**भावार्थः -**

अग्निशब्देन परमेश्वरस्य सर्वाधारसर्वज्ञसर्वरचकविनाशरहितानन्तशक्तिमत्त्वादिगुणैः सर्वप्रकाशकत्वात्, तथा भौतिकस्याकर्षणगुणादिभिर्मूर्त्तद्रव्याधारकत्वाच्च ग्रहणमस्तीति। स च विद्वद्भिः समागमे कृते सृष्टिपदार्थगुणविचारेण च विदितो भूत्वा अनन्तसुखदाता सम्यक् शिल्पविद्याप्रापकश्च भवतीति सर्वैर्मनुष्यैर्विज्ञातव्यम्।

सायणाचार्य्येण गमदिति लोडन्तं व्याख्यातम्, तदेतदस्य भ्रान्तिमूलमेव। कुतः? गमदित्यत्र 'छन्दसि लुङ्लङ्लिटः' इति सामान्यकालविधायकस्य सूत्रस्य विद्यमानत्वात्।।५।।

**- महर्षिदयानन्दसरस्वती**

[ऋग्वेदभाष्यम्, प्रथमो भागः, ४५३ पृष्ठे]

# वैदिककालीनगणतन्त्रशासनपद्धतिः

- डॉ० कैलाशनाथद्विवेदी, पूर्वप्रचार्यः
शास्त्रीनगरम्, अजीतमल (औरेया) २०६१२१

विश्ववाङ्मये वेदाः सन्ति निखिलज्ञान-विज्ञानराशयः। अस्माकं पुरातनधर्मदर्शनकला-वाणिज्यशासनादिप्रमुखविषयाणां मूलावधारणा वेदेष्वेव वर्तते। वेदेषु गणतन्त्रावधारणा विचार्यतेऽत्र सोदाहरणम्।

गण्+अच्=पुल्लिङ्गेऽनेकार्थको गणः शब्दः सिद्ध्यति। एकोद्देश्याय निर्मिता नराणां संख्या गणः इति कथ्यते। एवं शासनार्थकं तन्त्र-शब्दः संवैधानिकस्य कस्यचित् कार्यस्य कर्तुमुचिता पद्धतिः राज्यं शासनं वाऽर्थे प्रायः प्रयुज्यते प्राज्ञैः। सामान्यतः संवैधानिकप्रणाल्या निर्वाचितजनप्रतिनिधिभिर्यस्मिन् शासनं क्रियते तद् गणतन्त्रं, जनतन्त्रं, प्रजातन्त्रं वा आङ्ग्लभाषायां Republic इत्यभिधीयते।

वेदेषु[1] जन- समूहार्थकः गणस्तथा गणपतिप्रभृतिशब्दाः वर्तन्ते। अनेन तद्युगीना गणतन्त्रपद्धतिः सामान्यतः स्वस्थैव प्रतिभाति। गणतन्त्रे गौरवशाल्यधिष्ठाता प्रतिष्ठितो गणाध्यक्षः गणपतिर्वा प्रणम्यते परमश्रद्धया प्रथममेव हवनकार्ये। यथा -

गणानान्त्वा गणपतिं हवामहे, प्रियाणान्त्वा प्रियपतिं हवामहे। निधीनान्त्वा निधिपतिं हवामहेव्वसो मम। आहमजानिगर्भधमात्त्वमजासि गर्भधम्।।

- शुक्लयजुर्वेद १/१

वेदानां गणतन्त्रावधारणा-विचारसन्दर्भे तत्कालीन-भिन्नराज्यानां स्वरूपगतनामान्यपि विचारणीयानि। ऋग्वैदिकैतरेयब्राह्मणस्य अष्टमेऽध्याये वैदिकयुगीनविभिन्नराज्यानामेवं प्रमुखनामानि प्राप्यन्ते साम्राज्यम्, भौजराज्यम्, स्वाराज्यम्, वैराज्यम्, पारमेष्ठ्यराज्यम्, महाराज्यम्, आधिपत्यमयं राज्यम्, समन्तपर्यायिराज्यञ्च। वेदव्याख्यातारो विद्वांसः स्व-स्व-दृष्ट्यैव राज्यानामेषां विभिन्नप्रकारेण विवेचनं कृतवन्तः।

वैदिककालिकं 'साम्राज्यं' वर्तमानकालिक-साम्राज्यवादिनां देशैः सह न शक्यते तोलयितुम्। तदानीमपि दुराचारिणामत्याचारिणां राज्ञां शमनं क्रियते स्म। तेषां स्थाने च योग्योदारसदाचारि-शासकानामभिषेकोऽपि क्रियते स्म। लोकास्तदा माण्डलिकशासनं स्वीकुर्वन्ति स्म।

भौजराज्ये राज्यस्य प्राकृतिकसीमा भवति स्म। तस्मिन् परिमिते देशे एव तस्य शासकस्य शासनमधिकारो वाऽभवत्। यद्यत्र पाकिस्तान-बाङ्ग्लादेशविभाजनं नाऽभविष्यत्तर्हि भारतं

---

१- ऋग्वेदे ५/११/३ शर्धं शर्धं व एषां व्रातं व्रातं गणङ्गणं सुशस्तिभिः। अनुक्रामेम धीतिभिः ।।

भौजराज्यस्योदाहरणं भवितुमशक्ष्यत्। यतोऽत्र भारतमभितः प्राकृतिकसीमा वर्तते।

स्वाराज्ये शासने यमनियमादीनां पालनं परमनिष्ठया क्रियते स्म। अतः प्रजाजना अधिकारिणोऽपि स्वाराज्ये न प्रलोभिनो न वा कार्यचौरा आसन्। वैराज्ये शासने कस्यचनैकस्य राज्ञो नाधिपत्यं भवति स्म। जनतैव संविधान-निर्माणकार्यं करोति स्म। सैव सम्मिलितरूपेण शास्ति स्म, परन्तु नेदं कस्मिंश्चन विशालभूभागे भवति स्म।

पारमेष्ठ्यराज्ये सर्वेषां समानाधिकार आसीत्। अस्मिन् राज्ये शासकः सर्वत्र सर्वदा परमात्मनो विद्यमानतामवगच्छन् परमं सतर्कः सन् प्रजाः प्रशास्ति स्म। अत एव इदं राज्यं परमात्मन एव राज्यमासीत्।

महाराज्यम् अनेकेषां लघुराज्यानां सम्मिलित - रूपमासीत्। अतः राज्यकर्मणि सर्वेषां लघुराज्यानां समानोऽधिकारो भवति स्म। शासनविधेः संविधानमपि सर्वैरेव विभिन्नलघुराज्यैः सम्मिल्य विधीयते स्म। संभवतः सङ्घराज्यमासीत् आधुनिकमिदम्।

आधिपत्यराज्यम् अवश्यमेव वर्तमानकालिकं साम्राज्यवादिनां शासनसदृशमासीत्। अस्मिन् राज्ये एकस्यैव कस्यचन राज्ञः प्रभुत्वं भवति स्म, किन्तु आधुनिकसाम्राज्यवन्न तदानीं शासकस्य स्वेच्छाचारिता कुत्रचन श्रूयते स्म।

समन्तपर्यायिराज्ये माण्डलिका राजा आधिपत्यमकुर्वन्। एष्वेको महत्त्वशाली कश्चन शासकः प्रशासनमकरोत्। अन्ये माण्डलिका राजानश्च तदधीनाः कार्यमकुर्वन्।

एतदतिरिक्तं यजुर्वेदे (९/४०,१०/१८) एकस्य कस्यचन जानराज्यस्यापि नाम प्राप्यते- 'महते जानराज्याय.....' इति। सम्भवतः इदमेव जानराज्यं साम्प्रतिकं गणतन्त्रं प्रजातन्त्रं जनतन्त्रं वा जानराज्यमासीत्। अस्मिन् गणतन्त्रे प्रजातन्त्रे वा प्रजाजनैर्निर्वाचित एव जनो राष्ट्रं प्रशास्ति स्म। ईदृग्विधस्य प्रजाजननिर्वाचितराष्ट्रशासकस्य सम्बन्धे ऋग्वेदेऽपि समुल्लेखो वर्तते। यथा हि-

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥
- ऋक्. १०/१७३/१

अस्य मन्त्रस्य तात्पर्यमस्ति यत् हे निर्वाचितविशिष्टजन! त्वं राष्ट्रस्य शासकत्वेन नियुक्तोऽसि। त्वमस्मिन् पदे निश्चलो भूत्वा तिष्ठेः। त्वया ईदृक्विधया शासनप्रणाल्या कार्यं करणीयं येन प्रजाः सर्वास्त्वामेव वाञ्छेयुस्तथा त्वदधीनमिदं राष्ट्रमपि न भ्रंशेदिति।

गणतन्त्रस्य अवधारणायां जनतया स्वशासक-प्रतिनिधेर्निर्वाचनं सर्वस्वीकृतसंविधानानुसारं शासकीयकार्याणां करणञ्च प्रमुख तत्त्वं वर्तते। न केवलं ऋग्वेदे गणतन्त्रस्य जनराज्यस्य वा शासकनिर्वाचनस्य वर्णनं प्राप्यते, अथर्ववेदेऽपि राज्ञो निर्वाचनस्य जनतायाः समर्थनस्यावश्यकतायाः समुल्लेखः समुपलभ्यते। यथा -

विशो न राजनं वृणानाः। (ऋक्. १०/१२४/८)

त्वां विशो वृणतां राज्याय। (अथर्व. ३/४/२)
विशस्त्वा सर्वा वाञ्छन्तु (अथर्व. ६/८७/१)

गणतन्त्रे कुलग्रामपुरविशव्रजजनगणादीनां भूमिकाऽत्यन्तमेव महत्त्वपूर्णाऽऽसीत्। एषां प्रतिनिधयः क्रमशः कुलप[2] ग्रामणी[3] पौर[4] (पूर्पति) विश्पति[5] वज्रपति[6] गणपति[7] जनपतिप्रभृतयः महत्त्वपूर्णाः सन्ति, ये सक्रियरूपेण गणतन्त्रं जनराज्यं वा सञ्चालयन्ति स्म संविधानानुसारमैक्यभावेन।

गणतन्त्रस्य समस्तशासनकार्याणि मतैक्येन निर्णीयन्ते स्म समितिषु सभासु च। शासकस्य परामर्शदातृरूपेण सभासमितिनाम्नोः परिषदोर्वर्णनमपि वैदिकसाहित्ये समुपलभ्यते। यथा-

**सभा च मां समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने।**

- अथर्व. ७/१२/१

मन्त्रणायां मते निर्णये वा समानताऽऽसीत् समितेर्महत्त्वपूर्णमवदानं गणतन्त्रस्य प्राणभूततत्त्वम्। यथोल्लिखितमस्मिन् ऐक्यविधायके मन्त्रे -

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि।।**

- ऋक् १०/१९१/३

अपि च-

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ।।

- ऋक्. १० / १९१ / ४

गणतन्त्रस्य प्रमुखं ध्येयं गणाध्यक्षस्य राष्ट्रपतेर्वा संवैधानिककर्त्तव्यरूपेण जनतन्त्रसंरक्षणं, विश्वहितसंरक्षणं, स्वराज्यसंरक्षणञ्च निर्दिश्यते यजुर्वेदे। यथा -

**जनभृतस्थ राष्ट्रदा राष्ट्रं मे दत्त। विश्वभृतस्थ राष्ट्रदा राष्ट्रं मे दत्त। स्वराज्यस्थ राष्ट्रदा राष्ट्रममुष्मै दत्त।**

- यजुर्वेद १० / ४

गणतन्त्रस्य शासनसूत्रं लोकायत्तं भवति। जननिर्वाचिताः शासनप्रतिनिधयः शासनसूत्रमस्मिन् जनतन्त्रराज्ये गृह्णन्ति। अतः लोकहितमेव एषां पावनं लक्ष्यं वर्तते। यद्येभिर्लोकहितं न सम्पाद्यते, जनमनोऽनुकूलं कार्यं च न क्रियते, तर्हि ते आगामिनि निर्वाचने प्रजया पदच्युताः क्रियन्ते।

एवं जनविश्वासमवाप्ता एव जनप्रतिनिधयो जनतन्त्रे गणतन्त्रे वा शासनं विदधति। प्रतिजनं भेदाभावात् समानत्वमत्रोररीक्रियते। अत्र जनो न साधनमात्रमपितु साध्यमेव। लोकहस्तेषु

---

२- ऋक्. १०/१७०/२ कुलपा न व्राजपतिं चरन्तम्।
३- ऋक्. १०/६२/११ सहस्रदा ग्रामणीर्मा रिषन्मनुः।
४- ऋक्. ५/७४/४ (पौरः) १/१७३/१० (पूर्पतिः)
५- ऋक्. १/३७/८, ८/८४/३
६- ऋक्. १०/१७०/२
७- ऋक्. ६/६८/९, ८/१६/१, ८/३७/३, अथर्व. ३/४/१, ६/९८/१

प्रभुत्वशक्तेः, सत्तया प्रजायाः प्राधान्यञ्च परिलक्ष्यते। गणतन्त्रे जनतन्त्रे वा जनहितकरमेव शासनम्। अत्र जनेभ्यः सामाजिकी राजनैतिकी आर्थिकी च स्वतन्त्रता भवति।

गणतन्त्रे परस्परमैक्यं बन्धुत्वं जनसहयोग-भावना प्रौढमताधिकारः स्वदेशप्रेम-राष्ट्रियभावनादयः प्रमुखा विशेषताः विद्यन्ते। जातिधर्म-वर्गक्षेत्रादिभेदाभावाद् गणतन्त्रे सामान्यतः सर्वधर्मजात्यादिहितसंरक्षणं जायते, यतो गणतन्त्रशासने लोकमतस्य वा प्राधान्यं भवति। जनमतमेव शासनपरिवर्तनं विधातुं प्रभवति। स्थानीयं स्वराज्यं गणतन्त्रशासनपद्धतेर्मूलम्। सर्वेषां लोकानामार्थिकी - सामाजिकी - समानता चापि गणतन्त्रस्याधाररूपेण गण्यते।

यद्यपि सिद्धान्ततः सर्वोत्तमः जनतंन्त्रवादः, किन्तु गणतन्त्रशासने केचन दोषा अपि संलक्ष्यन्ते। लोके सात्त्विका गुणिनश्च न तथा लोकंप्रियाः, यथा धूर्ताः वाचालाः प्रवञ्चकाश्च। ते बाहुबलेन धनादिना जातिवादेन सम्प्रदायवादेन च लोकान् प्रतार्य प्रतिनिधित्वं भजन्ते। मतदाने बहुसंख्याकानां प्राधान्यात् अल्पमतस्योपेक्षा भवति। भाषणस्वातन्त्र्याद् धूर्ताः वञ्चकाश्च स्वार्थसाधनाय राजनैतिकीमशान्तिं जनविद्वेषञ्च जनयन्ति। सज्जनानां विदुषाञ्च समादराभावात् कला-साहित्य-विज्ञानादीनां विकासोऽवरुध्यते। गणतन्त्रे प्रायः पिशुनभ्रष्टाचारि- खलानां प्राधान्यात् लोकानां नैतिकपतनमपि सञ्जायते। स्वार्थसाधनाय विविधदलानां समुद्भवो भवति, येन द्वेषपूर्णदलगतराजनीतिसमाश्रयणात् नैतिकं वातावरणं प्रदुष्यति।

गणतन्त्रस्य गौरवशालीतिहासः उत्तरवैदिक-कालादेव भास्वरो वर्तते। उत्तरभारतवर्षे यौधेयवृकदामणि - पार्श्वकम्बोजमद्रमालवमल्ल-लिच्छविशाक्यविदेहादीनां गणराज्यानां गौरवगाथा साहित्येतिहासग्रन्थेषु प्राप्यते एव। एषां प्रजातन्त्रात्मक-श्रेष्ठशासन-पद्धत्याऽस्य राष्ट्रस्य सर्वाङ्गीणविकासोऽभवत् तथोत्कृष्टस्वराष्ट्रप्रेम-भावनया सिकन्दरसदृशबाह्याक्रमणकारिणामवरोधोऽपि एभिर्वीरतया कृत आसीत्।

संक्षेपेण कथयितुं शक्यते यद् वैदिकर्षीणां गणतन्त्रस्य बहुजनसुखाय लक्ष्यपूर्णाऽवधारणा-ऽत्यन्तमुदात्ता उपादेया च प्रतिभाति। अस्या औपाधिकदोषान् दूरीकृत्य गुणान् एव गृह्णीयुः नीरक्षीरदृशा लोककल्याणकामिनो विज्ञराजनीतिज्ञाः, येनाऽस्माकं भव्यं भारतं भास्वरं भवेद् भूमण्डले गौरवशालिगणतन्त्रशासनपद्धतिं गृहीत्वा लोकमङ्गलाय।

['गुञ्जारवः' इत्यस्मात् त्रैमासिकात् साभारम्]

❖ आकाशवाण्या छतरपुरकेन्द्रतः संस्कृतकार्यक्रमे २६ जनवरी, २००३ दिनाङ्के प्रसारित- संस्कृतवार्ताया आलेखस्यांशः।

# काव्यं किम् ?

- डॉ० जयप्रकाशपाण्डेयः
साहित्यविभागाध्यक्षः
श्री दुर्गा जी संस्कृतमहाविद्यालयः
चण्डेश्वरः, आजमगढ़स्थः (उ.प्र.)

कवेः कर्म काव्यमिति कथ्यते। कवेः कर्मणि रचनासु वा तस्य मनोभावानां प्रस्फुटीकरणं भवति। कविः काव्य-जगति प्रजापतिः एव। यथा -

अपारे काव्य-संसारे, कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं, तथेदं परिवर्तते ।।

अत्र काव्यस्य संसारत्वं, कवेश्च प्रजापतित्वम् उपदर्शितम्। काव्यत्वशक्तिः अतिदुर्लभा भवति। यथा -

नरत्वं दुर्लभं लोके, विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं लोके, शक्तिस्तत्र सुर्दुर्लभा ।।

सचेतसां हृदि काव्यत्वशक्तिः निष्पन्ना भवति। ये शुष्कचेताः सन्ति, तेषां हृदि काव्यशक्त्याः अङ्कुरणं न भवति। कवित्वप्राप्तिः जन्मान्तरसुकृत - पुण्यपरिपाकादेव भवति। इयं तु अत्यन्तमेव दुष्प्राप्या वर्तते।

क्रौञ्चवधं दृष्ट्वा महर्षिवाल्मीकिहृदि करुणरसस्य समुत्पत्तिः सञ्जाता । करुणरसस्य परिपाकादेव व्यथितेन तेन वाल्मिकिना कविना व्याधं प्रति शापं प्रदत्तम्। यथा -

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्च-मिथुनादेकमवधीः काममोहितम् ।।

साहित्यदर्पणे विश्वनाथेनोक्तं यथा-'वाक्यं रसात्मकं काव्यम्।' रस एवात्मा काव्यस्य। तेन विना तस्य काव्यत्वाभावः प्रदर्शितः। यत्र रसात्मकता भवति, तत्र काव्यत्वं भवति। रसस्य तात्पर्यमेव वर्तते यत् - 'रस्यते इति रसः।' काव्यप्रकाशकारेण मम्मटाचार्येण काव्यप्रकाशे कथितं यत् -

तददाषौ शब्दार्थौ सगुणावनलङ्कृतिः पुनः क्वापि।

दोषरहितौ शब्दार्थौ, गुणयुक्तौ अलङ्कार-युक्तौ काव्यं भवति। अलङ्काराभावेऽपि तयोः शब्दार्थयोः काव्यत्वहानिर्न भवति। जयदेवेन चन्द्रालोके कथितं यत् अलङ्कार - रहितयोः

शब्दार्थयोः काव्यत्वं न भवति। यथा -

निर्दोषा लक्षणवती, सरीतिर्गुणभूषणा ।
सालङ्काररसानेकवृत्तिर्काव्यनाम भाक् ।।
अङ्गीकरोति यः काव्यं, शब्दार्थावनलङ्कृतिः।
कथं न मन्यते तस्मात्, अनूष्णं अनलङ्कृतिः।।

ये अलङ्काररहितौ शब्दार्थौ काव्यं स्वीकुर्वन्ति, ते अग्निम् उष्णतारहितं कथं न स्वीकुर्वन्ति। उष्णता दाहकता वा तु अग्नेः प्रकृतिः, माधुर्यं गोदुग्धस्य प्रकृतिः वर्तते । तेनैव प्रकारेण अनलङ्कृतिः काव्यस्य प्रकृतिः एव वर्तते।

उद्देश्यं विना कार्यं न भवति। उद्देश्यं तात्पर्यं वा प्रयोजनमस्ति। यथा -

प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते ।

मन्दोऽपि जनः निरुद्देश्यं कार्यं न विदधाति। सर्वत्र कार्यसम्पादने उद्देश्यं भवत्येव। काव्यस्यापि प्रयोजनं भवति। मम्मटाचार्येण कथितमपि काव्यप्रकाशे यथा -

काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिवृत्तये, कान्तासम्मिततयोपदेशयुजे ।।

काव्यादेव यशःप्राप्तिः, व्यवहारज्ञानं, सद्यः समस्यानां समाधानम्, अमङ्गलविनाशं च भवति। अत एव कथितं वर्तते -

विघ्नध्वंसात्मकत्वं मङ्गलत्वम् ।

उपदेशः त्रिविधः भवति। (१) प्रभुसम्मितोपदेशः, (२) सुहृद्सम्मितोपदेशः, (३) कान्तासम्मितोपदेशश्च। एषु उपदेशेषु कान्तासम्मितोपदेशः अमोघः भवति। कान्तायाः यादृशी शैली भवति, तादृशी शैली काव्यस्यापि न भवति।

काव्यस्योद्भवे हेतवः भवन्ति। यथा-

शक्तिर्निपुणतालोककाव्यशास्त्राद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यासः इति हेतुस्तदुद्भवे ।।

शक्तिः कवित्वबीजरूपा प्रतिभा, काव्यशास्त्रस्य अध्ययनम् अवेक्षणञ्च, काव्यज्ञनिर्देशानुसारं अभ्यासः इति त्रयः सम्मिल्य काव्यरचनायाः हेतुः एव भवन्ति, न तु हेतवः।

अतः काव्यस्य सर्वदैवाभ्यासं कर्तव्यम्। अनभ्यासे तद् विषमिव भवति काव्यम्। कथितं यथा -

'अनभ्यासे विषं विद्या ।'

विद्यायाः अध्ययनं, काव्याभ्यासम् एव काव्यस्य कर्तृत्वशक्तिप्रदायकौ भवतः। तस्मात् काव्यत्वशक्तिप्राप्तये लोकव्यवहारे काव्यस्याध्ययने च नैपुण्यं, अभिज्ञानं च आवश्यकं भवति।



# गायत्रीमन्त्ररचयिता वैदिककविर्विश्वामित्रः

- डॉ० आचार्यरामकिशोरमिश्रः
२९५, पट्टीरामपुरम्, खेकड़ा-२०११०१
बागपत (उ.प्र.)

महर्षिविश्वामित्रस्य पूर्वनामाऽऽसीद् विश्वरथः। विश्वरथः कान्यकुब्जस्य राज्ञो गाथिनः पुत्रः कुशिकस्य पौत्रश्च बभूव। पितुर्मृत्योः पश्चात् स कान्यकुब्जस्य राजाऽभवत्। यदा राजा विश्वरथः कान्यकुब्जान् शास्ति स्म, तदाऽयोध्यायां राज्ञः सत्यव्रतस्य राज्यमासीत्, यस्त्रिशङ्कुनाम्ना प्रसिद्धोऽस्ति। एतौ राजानौ परस्परं मित्रे बभूवतुः।

विश्वरथस्य राजकार्येषु रुचिर्नासीत्। स बौद्धिकतायां लीनोऽभवत्। तस्य ब्राह्मणत्वमहत्त्वाकाङ्क्षा समुत्पन्ना। तात्कालिकानामृषिकुलानां प्रमुखो देवराजवसिष्ठस्तां नाङ्गीचकार। महातपस्वी ब्राह्मणत्वं प्राप्तुं शक्नोतीति वसिष्ठस्य मतमासीत्। अतो विश्वरथो राज्यं परित्यज्य तपस्तप्तुं वनं जगाम।

देवराजवसिष्ठः सत्यव्रतत्रिशङ्कोः कुलगुरुरासीत्। सत्यव्रतो यज्ञेन सशरीरः स्वर्गं गन्तुमिच्छा प्रकटिता, तामपि वसिष्ठो न स्वीचकार। ततः सत्यव्रतो विश्वामित्रसमीपं गतः। विश्वरथो गुर्जरप्रदेशे सौराष्ट्रक्षेत्रे सागरानूपस्थाने तपसा तपन्, जीवान् रक्षन्, सर्वानुपकुर्वन् विश्वामित्रनाम लेभे। तपस्विनं विश्वामित्रमपि वसिष्ठो ब्राह्मणो नामन्यत। पुनः स कुरुक्षेत्रे सरस्वत्यास्तटे रुषुङ्गतीर्थे कठोरतपस्यामारभत। ततोऽपि वसिष्ठस्तं ब्राह्मणं न मेने।

यदानीं विश्वामित्रस्तपोभिः सह यज्ञविधाने मन्त्रविरचने च प्रवीणो बभूव, तदानीं वसिष्ठस्तं ब्राह्मणं स्वीचकार। यदा स राजर्षिर्बभूव, तदा तस्य मन्त्रा ईशोल्लेखेन प्रभाविनो बभूवुः। यथा -

**यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पूषाविता भुवत्[1] ।।**

य ईश्वरः सर्वाल्लोकान् जीवान् प्राणिनश्च सम्मुखमवलोकयति। तांश्च परस्परं सम्मिलितानभिपश्यति। स ईश्वरो निरन्तरमस्माकं पालकः पोषको रक्षकश्च भवेत्। अपि च -

**त्रिरा दिवः सवितर्वार्याणि दिवे दिव आ सुव त्रिर्नो अह्नः। त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः[2] ।।**

हे सवितः ! प्रतिदिनमस्माकमिष्टकर्माणि ग्रहणीयान्यैश्वर्याणि समुत्पादय त्रिवारम्। हे भजनीय ईश्वर ! दिनस्य मध्येऽस्माकं धनानि

(१) ऋग्वेदः ३/६२/९

(२) ऋग्वेदः ३/५६/६

त्रिवारमुत्पादय। हे त्रातः ! जगद्रक्षक ! उत्तमविभागाय सुवर्णरजतलौहादिवसून्यन्तरिक्षं पृथिवीं च धारय।

यदा सत्यव्रतस्य शततमो यज्ञः प्रवर्तते स्म, तदा स वसिष्ठस्याऽस्वीकृतेः पश्चाद् विश्वामित्रं स्वं सशरीरं स्वर्गं प्रापयितुं प्रार्थयत्। सत्यव्रतस्य तां प्रार्थनां स्वीकृत्य विश्वामित्रेण स्व-तपोबलेन स स्वर्गं प्रेषितः। मम तपोबलेन स्वर्गं गच्छेत्युक्त्वा विश्वामित्रेण स्वर्गं प्रेषितः स सत्यव्रतः, परं तत इन्द्रेण मम तपोबलेनाऽधो गच्छेत्युक्त्वा स नीचैर्निपातितः। विश्वामित्रेण स्वतपोबलेन तस्याऽधःपतनमवरोधितम्। इन्द्रेणापि तस्य स्वर्गारोहणं बाधितम्। इत्थं स पृथ्वीस्वर्गमध्ये गगने तस्थौ, यस्त्रिशङ्कुनामकस्तारकरूपेणाऽद्यापि दक्षिणदिशि पतित[3] इव दृश्यते।

अनेन तपोबलेन प्रभावितो महर्षिवसिष्ठस्तं विश्वामित्रं ब्रह्मर्षिं जगाद। ततः स मन्त्ररचने संलग्नो बभूव। यदा स पुष्करतीर्थे सूर्योपासना-संलग्नोऽभवत्, तदा तन्मुखादेक ईदृशः सूर्यमन्त्रः प्रस्फुटितः, योऽद्य गायत्रीमन्त्रनाम्ना प्रसिद्धोऽस्ति। यथा -

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात्[4] ।।

अस्मिन् मन्त्रे स सर्वोपकार-कामनया सूर्योपासनां चकार। स वदति- 'वयं सर्वे जनाः सर्वोत्पादकस्य जगन्नियन्तुर्देवस्य तदुत्तमं श्रेष्ठं तेजो धारयाम, योऽस्माकं बुद्धीः प्रेरयेत्।'

अस्य गायत्रीमन्त्रस्य प्रभाव एतावान् विलक्षणोऽभवत्, यदयं सर्वजनेषु प्राचलत्। एष मन्त्रो गेयो गायत्रीछन्दसि निबद्ध आसीत्। अतोऽयं गायत्रीमन्त्रः कथितः। शनैः शनैरेष गेयतया हिमालयात् समुद्रपर्यन्तं सिन्धुतो ब्रह्मपुत्रं यावज्जनानां वाणीरारुरोह। अस्य मन्त्रस्य जापेन केनचित् स्वास्थ्यं लेभे, केनचिच्च ज्ञानमलभत। इत्थमस्य प्रचारो वृद्धिमाप।

विश्वामित्रस्य मन्त्रविरचने प्रतिभा प्रावर्धत। अनेन (५०) पञ्चाशत् सूक्तानि विरचितानि[5]। अस्य पिता गाथी ऋग्वेदस्य सूक्तकारोऽस्ति। गाथिना चत्वारि सूक्तानि विरचितानि[6]। पितामहस्य कुशिकस्याऽप्येकं सूक्तं प्राप्यते[7]। यः शतर्चो लिखति, स शतर्ची कथ्यते। य ऋषिः शतर्ची भवतिस्म, सोऽद्यतनमहाकवि-सम्मानं प्राप्नोतिस्म। अनेन (५३६), रसाग्निआणर्चः प्रणीताः, याः सूर्याग्नि-देवादिकस्तुतिविषये विद्वन्नृपादिनियमादिविषये

(३) अभिज्ञानशाकुन्तलम्, (द्वितीयाङ्के) त्रिशङ्कुरिवाऽन्तरा तिष्ठ।
अत्र कपिलदेवद्विवेदिना कृता टिप्पणी द्रष्टव्या।

(४) ऋग्वेदः ३/६२/१०

(५) ऋग्वेदः ३/१-१२, २४-३०, ३२-६२=५०

(६) ऋग्वेदः ३/१९-२२

(७) ऋग्वेदः ३/३१

उषःप्रकृतिनद्यादिविषये च कथिताः। सपादञ्च शतर्ची विश्वामित्रः सूर्यविषयं वर्णयति –

मित्रो अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः। मित्रो अध्वर्य्युरिषिरो दमूना। मित्रः सिन्धूनामुत[८] पर्वतानाम् ।।

सूर्य एव प्रदीप्तोऽग्निरस्ति। सूर्य एव होताऽस्ति। सूर्य एव जलवर्षणकर्ता वरुणोऽस्ति। सूर्य एव समुत्पन्नपदार्थज्ञाता जगदीश्वरोऽस्ति। सूर्य एवाऽहिंसकोऽध्वर्य्युरस्ति। सूर्य एव नदीनां पर्वतानां च दमनकर्ता=अर्थाद् नदीनां शोषयिता पर्वतानां च भ्रंशयिता वर्तते। अथ स इन्द्रविषये कथयति –

इन्द्र त्वा वृषभं सुते सोमे हवामहे ।
स पाहि[९] मध्वो अन्धसः ।।

हे इन्द्रदेव ! मधुरगुणयुक्तेऽन्नादिसमुत्पन्ने सोमादिभैषजसमूहे बलिष्ठं त्वां वयमाह्वयामः। स त्वमस्माकमन्नादिकं दत्त्वा रक्ष।

अद्यतनकालात् सप्तसहस्रवर्षपूर्वं त्रेता-युगारम्भे सत्यव्रतत्रिशङ्कोः पुत्रो राजा हरिश्चन्द्रो बलियज्ञं प्रारभत। राज्ञो हरिश्चन्द्रस्य पुत्रो रोहिताश्वो 'यज्ञे तस्य बलिः प्रदास्यते' इति ज्ञात्वा वनं पलायितः। राजगुरुणा देवराजवसिष्ठेनोक्तं यद् यज्ञे बलिस्त्ववश्यमेव प्रदास्यते। राजकुमारस्य रोहितस्य नो, तदपरस्य कस्यचित् स्थानापन्नस्य बलिस्तु देयः। राजाज्ञया बलिदानार्थमन्वेषणे निर्धन ऋषिरजीगर्तो राजपुरुषैर्गृहीतः। तेनाऽजीगर्तेन धनादिकं गृहीत्वा राजकुमाररोहितस्थाने बलये स्वकनिष्ठसुतः शुनःशेपः प्रस्तुतः। स स्तम्भेन[१०] बन्धितः ।

यदृषिविश्वामित्रेण श्रुतं तत्तेन यज्ञं प्रविश्य नृपं हरिश्चन्द्रं महर्षिवसिष्ठं च निर्भर्त्स्य बलिस्तम्भाच्च मोचयित्वा स शुनःशेपः स्वाश्रमं नीतः। सः पठितः शिक्षितश्च। पुनस्तेनर्चो लेखितुं प्रारब्धाः। विश्वामित्रेण च शुनःशेपः स्वपुत्रः स्वीकृतो घोषितः। सः सप्तसूक्तानि[११] विरचय्य ऋग्वेदस्य सूक्तकारो बभूव । तेन स्वनाम देवरातिविश्वामित्र इति घोषितम्।

विश्वामित्रस्य सन्तानैः शुनःशेपस्य पुत्रकरणं न स्वीकृतम्। विश्वामित्रेण शुनःशेपः स्वपुत्र एव मानितः। अतोऽनेन शुनःशेपकाण्डेन रुष्टैर्विश्वा-मित्रस्य सन्तानैर्वैश्वामित्र इत्युपनाम परित्यक्तम्। पुनश्च स्वप्रपितामहस्य कुशिकनाम्ना निष्पन्नं 'कौशिक' इत्युपनाम तैः स्वनामभिः सह संयुक्तम्। ये शुनःशेपकाण्डसमर्थका आसन्, ते वैश्वामित्राः कथिताः। ये च तद्विरोधिनोऽभूवन्, ते कौशिका बभूवुः। इत्थं शुनःशेपकाण्डबलात् कौशिकगोत्रं प्रावर्तत। राजर्षिविश्वामित्रः स्वतपोबलेन ब्रह्मर्षिपदं प्राप।

---

(८) ऋग्वेदः ३/५/४
(९) ऋग्वेदः ३/४०/१
(१०) ऐतरेयब्राह्मणम् ७/१३-१८
(११) ऋग्वेदः ३/२४-३०

# वेदोऽखिलो धर्ममूलम्

- डॉ. कपिलदेव द्विवेदी आचार्यः
पूर्वकुलपतिः, ज्वालापुरीयगुरुकुलमहाविद्यालयस्य
निदेशकः विश्वभारतीअनुसन्धानपरिषदः
ज्ञानपुरम्, वाराणसी (उ.प्र.)

## वेदशब्दार्थः -

'विद् ज्ञाने' इति ज्ञानार्थकाद् विद्धातोर्घञि प्रत्यये कृते वेद इति रूपं निष्पद्यते। एवं वेदशब्दो ज्ञानार्थकः। ज्ञानराशिर्वेद इति वक्तुं शक्यते। विद् सत्तायाम्, विद् विचारणे, विद्लृ लाभे, विद् चेतनाख्याननिवासेषु इति धातुभ्योऽपि घञि वेदरूपं निष्पद्यते। वेदा ज्ञानराशित्वात् शाश्वतस्थायिनः, ज्ञाननिधयः, मानवहितप्रापकाः, मनुज-कर्तव्य-बोधका इति विविधधात्वर्थग्रहणाद् ज्ञायते।

## वेदानां वैशिष्ट्यम् -

वेदार्थानुशीलनाद् ज्ञायते यद् वेदा हि विविधज्ञानविज्ञान-राशयः, संस्कृतेराधाररूपाः, कर्तव्याकर्तव्यावबोधकाः शुभाशुभनिदर्शकाः, जीवनस्योन्नायकाः, विश्वहितसम्पादकाः, आचार-सञ्चारकाः, सुखशान्तिसाधकाः, ज्ञानालोकप्रसारकाः, सत्यतायाः सरणयः कलाकलापप्रेरकाः, आशाया आश्रयाः, नैराश्य-विनाशकाः, चतुर्वर्गावाप्तिसोपानस्वरूपाश्च सन्ति।

वेदानां महत्त्वविचारचिन्तायां कतिपयेऽनुयोगाः पुरतोऽवतिष्ठन्ते। कति वेदाः? किं वेदानां महत्त्वम्? किं वेदानां वेदत्वम्? किं तत्र विशिष्टं ज्ञानम्? किं तेषां व्यावहारिकी उपयोगिता? किं वेदाध्ययनस्य जीवने उपयोगित्वम्? किं च समस्याबहुले जगति समस्या-निराकरणत्वं वेदानाम्? किं च वेदानां धार्मिकं राजनीतिकम् आर्थिकं भाषा-वैज्ञानिकम् ऐतिहासिकं काव्यशास्त्रीयं शास्त्रीयं सामाजिकं सांस्कृतिकं च महत्त्वम्? इत्येवात्र समासतो विव्रियते प्रस्तूयते च।

## वैदिकं साहित्यम् -

मुख्यत्वेन वेदशब्दः ऋग्यजुःसामाथर्वनामभिः प्रचलितानां चतसृणां वेदसंहितानां बोधकः। एतेषामेव चतुर्णां वेदानां व्याख्यानभूता ब्राह्मणग्रन्थाः सन्ति, येषु वैदिककर्मकाण्डस्य विशदं वर्णनमस्ति। एतेषु वेदानाम् आध्यात्मिकी व्याख्याऽपि प्रस्तूयते। एतेषां परिशिष्टरूपेण आरण्यकग्रन्थाः सन्ति। एषु अध्यात्मविद्याया विवेचनं प्राप्यते। उपनिषत्सु च तस्या एवाध्यात्मविद्यायाश्चरमोत्कर्षः संलक्ष्यते। वैदिकसाहित्यशब्देन समग्रोऽपि मन्त्र-ब्राह्मण-आरण्यक-उपनिषत्-संग्रहरूपो निधिर्गृह्यते। अतएव 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप. श्रौत. ३१) इति निर्दिश्यते।

## वेदानां धार्मिकं महत्त्वम् -

वेदा मन्वादिभिः ऋषिभिः परमप्रमाणत्वेनोपन्यस्ताः। 'वेदोऽखिलो धर्ममूलम् (मनुस्मृति २-६)' इति समुद्घोषयता मनुना

समग्रस्यापि वेदनिधेर्धर्माधार - रूपेण प्रतिष्ठा विहिता। मानवस्याखिलं कृत्यजातं कर्तव्याकर्तव्यं वा वेदेषु विशदतया निरूप्यते। अतएव वेदा आचारसंहिता-रूपेण प्रमाणीक्रियन्ते।

यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।।
- मनु. २-७

सर्वेऽपि विद्वत्तल्लजा भारतीया दार्शनिकाः, आचारशिक्षणप्रवणाः स्मृतिकाराः, शब्दतत्त्व-मीमांसादक्षा वैयाकरणाः, अन्ये च शास्त्रकारा वेदानां परमप्रामाण्यं प्रतिपदम् उद्घोषयन्ति। अतएव महर्षिणा पतञ्जलिना कर्तव्यत्वेन समादिश्यते यत्- ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ।
- महाभाष्य, आह्निक १

स्मृतिकारैर्न एतावतैव विरम्यते, अपितु निर्दिश्यते यत् ब्राह्मणेन एकनिष्ठया वेदाध्ययनं सम्पाद्यम्। एतद् ब्राह्मणस्य परमं तपः। यश्च वेदाध्ययनम् अवमत्य शास्त्रान्तरे कृतमतिः, स जीवन्नेव सपरिवारः शूद्रत्वम् उपयाति।

वेदमेव सदाऽभ्यस्येत् तपस्तप्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ।।
- मनु. २-१६६

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।
- मनु. २-१६८

## वेदानां सांस्कृतिकं महत्त्वम् -

भारतीयायाः संस्कृतेर्मूलस्रोतोऽनुसन्धीयते चेत् तर्हि वेदा एव तन्मूलस्रोतस्त्वेनोपतिष्ठन्ति। वेदष्वेव प्रत्नतमा भारतीया संस्कृतिर्वर्णिताऽस्ति। भारतीयायाः संस्कृतेर्मूलरूपं वेदेष्वेवोपलभ्यते। वेदेष्वेव प्राक्तनभारतीयानां जीवनदर्शनं, कार्यकलापः, आचार-विचाराः, नैतिकं सामाजिकं च चरितं प्राप्यते। मानवानां विविधकर्त्तव्यादिनिर्धारणं तत्रैवोपलभ्यते। उक्तं च मनुना-

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।
- मनु. १-२१

लोकमान्य-तिलकमहाभागास्तु वेदेषु प्रामाण्यबुद्धिमेव आर्यत्वस्य लक्षणं व्यादिशन्ति- 'प्रामाण्यबुद्धिर्वेदेषु ।' वेदेष्वेवार्याणां संस्कृतेर्विशुद्धं रूपं विस्तरशः प्राप्यते। आर्याणां यज्ञेषु दृढ़विश्वासः, एकेश्वरवादेन सहैव बहुदेवतावादस्यापि स्वीकरणम्, अनासक्तभावनया कर्मविधिः, ईश्वरस्य सर्वव्यापकत्वम्, ज्ञानकर्मणोः समन्वयः, भौतिकवादं प्रत्यनास्था, पुनर्जन्मनि विश्वासः, मोक्षस्य जीवनोद्देश्यत्वं चेत्यादितथ्यानि वेदेष्वेव प्राप्यन्ते।

विश्वसंस्कृतेरैतिह्यं गवेषितं चेत् तर्हि वेदा एव सर्वप्रमुखत्वेन दृष्टिपथम् अवतरन्ति। अस्मिन् संसारे संस्कृतेः सभ्यतायाश्च कथमिव विकासोऽभूदित्यर्थं वेदानुशीलनम् अनिवार्यम् आपद्यते। तत एव क्रमिकविकासस्य प्रक्रिया प्राप्यते। अतएव यजुर्वेदे प्राप्यते-'सा प्रथमा संस्कृतिर्विश्ववारा' (यजुर्वेद ७-१४), वैदिकी संस्कृतिः प्रथमा संस्कृतिरासीत्।

## शास्त्रीयं महत्त्वम् -

वेदानां शास्त्रीयं महत्त्वं सर्वतोमुख्यं वर्तते। 'सर्वज्ञानमयो हि सः' इति वदता मनुना वेदानां

सर्वविधज्ञाननिधानत्वम् उरीकृतम्। यदि विचारदृशा समीक्ष्यते तर्हि वेदेषु बीजरूपेण दार्शनिकाः सिद्धान्ताः, राजनीतिः, समाजशास्त्रम्, अध्यात्मम्, मनोविज्ञानम् आयुर्वेदः, गणितम्, अर्थशास्त्रम्, नाट्यशास्त्रम्, काव्यशास्त्रम्, कामशास्त्रम्, अन्याश्च विविधाः कलास्तत्र तत्र वर्ण्यन्ते। वैदिकं दर्शनम् अध्यात्मतत्त्वं चोपादाय उपनिषदो विविधानि दर्शनानि च प्रवृत्तानि। तथ्यमेतद् निदर्शनरूपेण नाट्यशास्त्रकृतो भरतमुनेर्विवेचनेन विशदीभवति-

जग्राह पाठ्यम् ऋग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ।।

- नाट्यशास्त्र १-१७

## नैतिकं महत्त्वम् -

वेदानाम् आचारशिक्षा- दृष्ट्या, नैतिक-दर्शनरूपेण चातीव महत्त्वं वर्तते। कर्तव्योद्‌बोधनरूपेण तेषां परमं प्रामाण्यं वर्तते। किं कर्म, किम् अकर्मेति चिन्तायां वेदा एवादर्शरूपेण प्रस्तूयन्ते। अतएव मनुनोच्यते-

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षात् धर्मस्य लक्षणम्।।

- मनु. २-१२

श्रुतिस्मृत्युदितं धर्मम् अनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।।

- मनु. २-९

धर्मचिन्तायां कर्तव्यविचारणे च वेदाः परमप्रमाणभूताः सन्ति। यथा -

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।।

- मनु. २-१३

## सामाजिकं महत्त्वम् -

समाजशास्त्रीयदृष्ट्याऽपि वेदा अत्यन्तं महत्त्वपूर्णाः सन्ति। समाजस्य विकासस्य, सभ्यतायाः समुन्नतेः, वर्णानां विविध - वृत्तिपराणां नराणां च कर्मकलापस्य, सामाजिक्या व्यवस्थायाश्च महत्त्वपूर्णम् इतिवृत्तं वेदेषूपलभ्यते। प्राक्तनस्य समाजस्य किं स्वरूपमासीदित्यपि तत एवाप्तुं पार्यते।

## आर्थिकं महत्त्वम् -

अर्थशास्त्रदृष्ट्याऽपि वेदानां महत्त्वम् अस्ति। वेदेषु प्रत्नाया अर्थव्यवस्थायाः स्वरूपं स्फुटं समवाप्यते। आदान - प्रदानस्य, क्रय-विक्रयस्य, व्यापारस्य वाणिज्यस्य च, गवादिपशूनाम्, कृषि-धान्यादीनां च का व्यवस्थाऽवस्था चासीदित्यपि तत्र प्राप्तुं शक्यते। आदान-प्रदानस्य महत्त्वं यजुर्वेदे वर्ण्यते-

देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारं च हरासि मे निहारं निहराणि ते ।।

- यजुर्वेदः ३-५०

## राजनीतिकं महत्त्वम् -

राजनीतिशास्त्र - दृष्ट्या वेदानां महत्त्वं नावमूल्ययितुं शक्यते। वेदेषु राज्ञः प्रजायाश्च कर्माणि, राजतन्त्रस्य विविधं स्वरूपम्, राज्ञो वरणम्, सभायाः समितेश्च संस्थापना, मन्त्रिपरिषदो मनोनयनम्, राजतन्त्रीया प्रजातन्त्रीया च शासनव्यवस्था, शत्रु-संहारः, सामदण्डादिविधीनां प्रयोगः, समुपलभ्यन्ते। वेदेषु राज्ञो निर्वाचनस्य प्रजातन्त्रीयाया राज्यव्यवस्थायाश्चापि समुल्लेखो

विविधेषु स्थलेषु उपलभ्यते। तद्यथा-

विशस्त्वा सर्वा वाञ्छन्तु। (अथर्व. ६-८७-१)

त्वां विशो वृणतां राज्याय। (अथर्व. ३-४-२)

महते जानराज्याय । (यजुर्वेदः ९-४०)

## भाषावैज्ञानिकं महत्त्वम् -

तुलनात्मक-भाषा-विज्ञानस्याध्ययनाय वेदानाम् अतीव महत्त्वं विद्यते। वेदा विश्वस्य प्राचीनतमाः समुपलब्धा ग्रन्थाः। तत्रापि ऋग्वेदस्य प्राचीनतमत्वेन भाषायाः प्राचीनतमं रूपं प्राप्यते। पारसीकधर्मग्रन्थ-जेन्दावेस्ता (छन्दोऽवस्था) ग्रन्थेन सह तुलनायाम् अवेस्ता- भाषया सह वैदिकभाषाया घनिष्ठः सम्वन्धो दृश्यते। ऋग्वेदीया मन्त्रा अवेस्ताभाषायाम् अवेस्ता-मन्त्राश्च वैदिकमन्त्रेषु च परिवर्तयितुं शक्यन्ते। तुलनात्मक-भाषाविज्ञानस्य दृष्ट्या विशेषतो वेदानाम् अध्ययनं पाश्चात्त्यदेशेषु प्रवृत्तम्। वैदिक-संस्कृतभाषायाः लौकिक-संस्कृतस्य, ततश्च भाषाणाम् अन्यासां जनिक्रमस्यावबोधाय वेदानाम् अध्ययनम् अनिवार्यम्।

## ऐतिहासिकं महत्त्वम् -

वेदेषु कतिपये ऐतिह्यावबोधकाः सन्दर्भा अपि तत्र तत्रोपलभ्यन्ते। तानाश्रित्य सन्दर्भान् विद्वद्भिः प्राचीनतमम् ऐतिह्यं प्रस्तूयते। तत्र गङ्गादीनां नदीनाम् (ऋग्. १०-७५-५), दाशराज्ञयुद्धस्य (ऋग्. ७-८३-७), पञ्च जनान् (ऋग्. ३-३७-९), विविधानां वर्णानां वृत्तीनां च (यजु. ३०-५, २२) उल्लेखः प्राप्यते।

## काव्यशास्त्रीयं साहित्यिकं च महत्त्वम् -

काव्यशास्त्रीयदृष्ट्याऽपि वेदानां महत्त्वं प्रशस्यम्। तत्र अनुप्रास - यमक - रूपकादीनाम् अलङ्काराणां प्रयोगोऽनेकत्र प्राप्यते। उषःसूक्ते उषसो वर्णने कवित्वस्य स्फुटं दर्शनं जायते। सुन्दरी युवतिः स्ववस्त्राणीव उषाः स्वीयं सौन्दर्यं विस्तारयति। सकलेऽपि भुवने तस्याः सौन्दर्यम् आह्लादकारि व्याप्नोति -

अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी । स्वर्जनन्ती सुभगा सुदंसा आन्ताद् दिवः पप्रथ आ पृथिव्याः ।।

- ऋग्. ३-६१-४

एवं वेदाध्ययनं जीवनं पावयति, चिन्ताकुलं जगत् चिन्तायास्त्रायते, लोकानां विविधाः समस्या निवारयति, जीवनम् उन्नमयति, सद्भावांश्च प्रेरयति, इति सर्वथा वेदानां महत्त्वं सिध्यति।

वेदानां महत्त्वम् अङ्गीकृत्यैव भारतीयैः पाश्चात्त्यैश्च विपश्चिद्भिः वेदाध्ययने स्वजीवनं यापितम्। तद् यथा- सायणाचार्य-वेंकटमाधव-महर्षिदयानन्द-मधुसूदन ओझा-मोतीलाल शर्मा-वासुदेवशरण अग्रवाल-मैक्समूलर-रुडाल्फ-रॉठ-विल्सन-ग्रिफिथ-मैकडानल-प्रभृतयो विद्वत्तल्लजाः।

---

# ❂ निवेदनम् ❂

मान्याः संस्कृतविद्वान्सः !

सर्वदा सर्वथा भवद्भिः 'भारतोदयः' इत्यस्य पत्रस्य प्रकाशनेऽस्मिन् राष्ट्रिये च कर्मणि प्रोत्साहकैः भाव्यम्।

- डा० केशवप्रसाद उपाध्यायः
सह-सम्पादकः
भारतोदयः संस्कृतमासिकपत्रस्य

# संस्कृत-समाचाराः

## रुद्रप्रयागे संस्कृतशिक्षणकेन्द्रस्य समुद्घाटनम्

राष्ट्रिय-संस्कृत-संस्थानेन सञ्चाल्यमानानां केन्द्राणां श्रृङ्खलायाम् अत्र श्री १०८ स्वामी-सच्चिदानन्द-वेदभवन-संस्कृत-महाविद्यालय-रुद्रप्रयागे अनौपचारिक - संस्कृतशिक्षणकेन्द्रस्य समुद्घाटनं विशेष समारोहपूर्वकं सुसम्पन्नम्। समारोहेऽस्मिन् मुख्यातिथिरूपेण समागताः रुद्रप्रयाग-जनपदस्य न्यायाधीशः आर. के. शर्मा सरस्वतीमातुः समक्षं दीपं प्रज्ज्वाल्य समुद्घाटनं कृतवान्।

समारोहं सम्बोधयता तेन भाषितं यत् संस्कृतं भारतीयसंस्काराणाम् आधाररूपम्। अस्यामेव भाषायाम् अस्माकं संस्कृतिः, आचारः, व्यवहारः निहिताः सन्ति। अतः संस्कृतभाषायाः संरक्षणम् अस्माकं भारतीयानां पुनीतं कर्तव्यम् अस्ति। अस्य समारोहस्य आध्यक्षं जिला शिक्षाधिकारी परमानन्द-भट्टवर्यः कृतवान्। स्वकीये सम्बोधने सः उक्तवान् यत् संस्कृतभाषा वैज्ञानिकी भाषा तु अस्त्येव, इयमस्माकं राष्ट्रियतायाः अपि आधारभूता।

विशिष्टातिथिरूपेण प्रसिद्धः शिक्षाविद् श्रीधर खाली कथितवान् यत् संस्कृतं सर्वासां भारतीयभाषाणां जननी अस्ति। संस्कृतं विना अन्यासां भाषाणां कल्पना एव कर्तुं न शक्यते। उपजिलाधिकारी उक्तवान् यत् सः स्वपक्षतः यावत् शक्यं संस्कृतस्य विकासाय प्रयतिष्यते। विद्यालयस्य प्राचार्यः डॉ. देवीप्रसाद देवली, डॉ. सुरेशचरण बहुगुणः, वेदविभागाध्यक्षः डॉ. रामप्रसाद उपाध्यायः चापि उपस्थितान् सम्बोधितवन्तः। विक्रमदेव शर्मा संस्कृतभारत्याः शिक्षकः प्रास्ताविकं प्रस्तुतवान्।

अस्य कार्यक्रमस्य सञ्चालनं डॉ. भानुप्रकाश देवली-संयोजकेन कृतम्। वैदिकराष्ट्रगानपुरस्सरं कार्यक्रमः सुसम्पन्नः। उपस्थितजनेषु नगरस्य बहवोऽधिकारिणः बुद्धिजीविनः, पत्रकाराः, शिक्षार्थिनः, वृद्धाः, बालाः, महिलाश्च उपस्थिताः आसन्।

## उत्तराञ्चलस्य जनभाषा संस्कृतम् आसीत

- सविता मोहना

देहरादूनम्। राष्ट्रिय - संस्कृत - संस्थानेन सञ्चालितस्य अनौपचारिक-संस्कृत शिक्षणकेन्द्रस्य उद्घाटनावसरे मुख्यातिथिरूपेण भाषमाणा उत्तराञ्चल-संस्कृत-अकादम्याः सचिवा डॉ. सविता मोहना उक्तवती यत् उत्तराञ्चलस्य विभिन्नस्थानेषु प्रसृताः ऐतिहासिकाः लेखाः सूचयन्ति यत् अत्रत्या जनभाषा संस्कृतम् एव आसीत्। प्रायः सर्वे एव शिलालेखाः संस्कृतभाषया लिखिताः सन्ति। संस्कृताद् एव कुमायूँनी-गढवाली-वाचोः उत्पत्तिः सञ्जाता।

सा उक्तवती यत् उत्तराञ्चल-संस्कृत-अकादमी प्रदेशस्य प्रमुखेषु स्थानेषु पुनः संस्कृतेन एव शिलालेखान् संस्थाप्य देवभूमेः सांस्कृतिकं महत्त्वं रक्षितुम् इच्छति। अस्य कार्यस्य आरम्भः रुद्रप्रयागतः करिष्यते। सा उक्तवती यत् भौतिकतायाः चरमोत्कर्षकाले दुःखसन्तप्तेभ्यः मानवेभ्यः संस्कृतम् एव सुखानां भाण्डारम् अस्ति। संस्कृतस्य प्रचार-कार्यार्थं सा जनानां सहभागिताम् आहूतवती।

विशिष्टातिथिः डॉ. मोहनलाल जोशी प्राचार्यः लक्ष्मणसंस्कृतमहाविद्यालयः उक्तवान् यत् संस्कृतभाषा संस्काराणां भाषा अस्ति। भारतस्य चतुर्दशविद्याः संस्कृते एव निहिताः सन्ति। कार्यक्रमस्य अपरा विशिष्टातिथिः डॉ. अन्नपूर्णा प्राचार्या आर्षकन्यागुरुकुलम् उक्तवती यत् संस्कृतेन जनस्य सर्वतोमुखी उन्नतिः भवति। विशिष्टातिथिः राष्ट्रिय - स्वयंसेवकसंघस्य प्रान्तसेवा - प्रमुखः सुरेशसुयालः उपस्थितान् सम्बोधयन् उक्तवान् यत् संस्कृतस्य कार्यम् ईश्वरीयं कार्यम् अस्ति। अनेन निश्चितरूपेण राष्ट्रोन्नतिः भविष्यति। सर्वे एव राष्ट्रभक्तजनैः संस्कृतप्रचारकार्ये सहयोगः प्रदातव्यः।

कार्यक्रमस्य अध्यक्षः रामकृष्णाश्रमस्य प्रधानः स्वामी विपाशानन्दः उक्तवान् यत् प्राचीनसंसारे यावत्यः संस्कृतयः विश्वे आसन्, तासु साम्प्रतं केवलम् आर्यसंस्कृतिः एव विराजते। एतस्य कारणं संस्कृतभाषा एव वर्तते। सः उक्तवान् यत् स्वामी विवेकानन्दः भविष्यवाणीं कृतवान् यत् २१ तमे शताब्दे भारतं पुनः जगद्गुरुत्वं प्राप्स्यति। संस्कृतभाषायाः अस्मिन् कार्ये महती भूमिका वर्तते। सः उक्तवान् यत् संस्कृतज्ञानं विना अस्माकं महान्तः ग्रन्थाः वेदाः रामायणं, महाभारतं, गीता इत्यादयः ज्ञातुम् एव न शक्यन्ते।

इतः पूर्वं स्वप्रास्ताविके भाषणे ऋषिकुल-विद्यापीठस्य हरिद्वारस्य अधिष्ठाता प्रकाशपन्तः उक्तवान् यत् संस्कृतभारत्याः प्रयासेन देशे चत्वारः ग्रामाः संस्कृतग्रामाः, सहस्रशः परिवाराः संस्कृतपरिवाराः, लक्षशः जनाः संस्कृतभाषिणः च सञ्जाताः। राष्ट्रियसंस्कृत-संस्थानस्य अनया योजनया नूनम् एव तल्लक्ष्यम् अधिगन्तुं साहाय्यं भविष्यति। धर्मपुर-विद्यामन्दिरस्य बालिकाः स्वागतगीतं सरस्वतीवन्दनां च प्रस्तुतवत्यः। शिवनाथ-संस्कृत-महाविद्यालयस्य छात्राः वैदिकं मङ्गलाचरणं प्रस्तुतवन्तः। कार्यक्रमस्य सञ्चालनं केन्द्रशिक्षकेण आशाराम-मैठाणिना कृतम्। संयोजकः डॉ० बुद्धदेव शर्मा अतिथीनां स्वागतं धन्यवाद- ज्ञापनं च कृतवान्।

## ब्राह्मण - संस्कृत - महाविद्यालये अनौपचारिक-केन्द्र-द्वारा संस्कृतस्य पुनः प्रतिष्ठा सञ्जाता

**- मनोहरलालः**

रुड़की (हरिद्वारम्)। अयं महाविद्यालयः संस्कृतमहाविद्यालयरूपेण एव संस्थापितः आसीत्। परन्तु संस्कृतस्य उपेक्षाकारणात् यदा छात्राः अत्र अल्पाः सञ्जाताः, तदा प्रबन्धकाः विद्यालयं सामान्यमहाविद्यालयरूपेण परिवर्तितवन्तः। परन्तु तेषां संस्कृतं प्रति सम्मानस्य भावना एव आसीत् यत् ते विद्यालयस्य नाम्नः संस्कृतशब्दं न निःसारितवन्तः। राष्ट्रिय-संस्कृत-संस्थानद्वारा उद्घाटितेन अनेन केन्द्रमाध्यमेन अद्य एकवारं पुनः अस्मिन् महाविद्यालये संस्कृतस्य प्रतिष्ठा सञ्जाता अस्ति।

उक्तविचारान् उत्तराञ्चल-आवास-विकास-परिषदः नवनियुक्तः अध्यक्षः बी. एस. एम. महाविद्यालयस्य प्रबन्धकश्च मनोहरलालशर्मा प्रकटितवान्। असौ अत्र राष्ट्रिय-संस्कृत- संस्थानेन सञ्चालितस्य अनौपचारिक-संस्कृत- शिक्षणकेन्द्रस्य उद्घाटनावसरे मुख्यातिथिरूपेण स्वविचारान् प्रकटयति स्म। सः सर्वान् जनान् आहूतवान् यत् ते केन्द्रस्य सफलतायै सहयोगं दद्युः। सः स्वयमपि उदघोषयत् यत् संस्कृतस्य प्रचाराय प्रसाराय सः सर्वविधां सहायतां सहयोगं च प्रदास्यति।

इतः पूर्वं प्रास्ताविकसम्बोधने हरिद्वारस्य ऋषिकुल-विद्यापीठस्य अधिष्ठाता प्रकाशपन्तः संस्कृतस्य महत्त्वं वर्णितवान्। श्रीमती मेहनाजा, सोनिया भारती च संस्कृतेन एव स्वविचारान् प्रस्तुतवत्यौ।

कार्यक्रमेऽस्मिन् संस्कृतभारत्याः प्रान्ताध्यक्षः डॉ. बुद्धदेवशर्मा उक्तवान् यत् संस्कृतभाषा अखण्डतायाः एकतायाः च भाषा अस्ति। तमिलनाडुराज्यस्य उदाहरणं ददत् सः सूचितवान् यत् तत्र एकस्मिन् प्रशिक्षणशिविरे ३०० तः अधिकाः प्रतिभागिनः पञ्जीकरणं कारितवन्तः। सः उक्तवान् यत् केवलं शिक्षकाः एव यदि व्रतं कुर्युः, तर्हि संस्कृतस्य स्थितिः परिवर्तयितुं शक्यते। केन्द्राध्यक्षः प्राचार्यः डॉ. आर. एस. विरमानी सर्वेभ्यः आगन्तुकेभ्यः आभारं प्रदर्शितवान्। कार्यक्रमस्य अध्यक्षतां कृतवान् योगी मंगलनाथ- सरस्वतीविद्यामन्दिरस्य प्राचार्यः सतीश उपाध्यायः। अस्मिन् अवसरे केन्द्रसंयोजिका ऋतुरानी सर्वेषां स्वागतं चकार।

[ वाक् समाचारपत्रात् साभारम् ]

---

## भारतोदयस्य स्वामित्वानुबन्धि फरवरी-मासात् परं निर्देष्टव्यं विवरणम्

फार्म - ६, नियम - ८

| | | |
|---|---|---|
| १- | प्रकाशनस्थलम् | - गुरुकुलमहाविद्यालयः ज्वालापुरम्, हरिद्वारम् (उत्तराञ्चलम्) |
| २- | प्रकाशन-समयः | - मासिकम् |
| ३- | मुद्रकस्य नाम | - डॉ. हरिगोपालशास्त्री |
| | राष्ट्रियता | - भारतीयः |
| | मुद्रणालय-सङ्केतः | - १. अनुभव प्रिन्टिंग प्रेस, १९, अवधूत मण्डल आश्रमः ज्वालापुरम्, हरिद्वारम् (उत्तराञ्चलम्)<br>२. गोल्डन टेम्पल आफसेट प्रेस कनखल, हरिद्वारम् (उत्तराञ्चलम्) |
| ४- | प्रकाशकस्य नाम | - डॉ. हरिगोपालशास्त्री |
| | राष्ट्रियता | - भारतीयः |
| | सङ्केतः | - प्राचार्यः, गुरुकुलमहाविद्यालयः ज्वालापुरम्, हरिद्वारम् (उत्तराञ्चलम्) |
| ५- | स्वामित्वम् | - गुरुकुलमहाविद्यालयः ज्वालापुरम्, हरिद्वारम् (उत्तराञ्चलम्)<br>पत्रालयः - गुरुकुलमहाविद्यालयः - २४९४०५ हरिद्वारम् (उत्तराञ्चलम्) |

अहं डॉ. हरिगोपालशास्त्री अनेन घोषयामि यदुपरि दिलखितं सर्वं विवरणं ममाभिज्ञातानुसारं यथावद् वर्तते।

डॉ. हरिगोपाल शास्त्री
प्रकाशकः सम्पादकश्च
भारतोदयः (संस्कृत-मासिकस्य)




सेवायां सम्माननीयाः सुरभारतीसमुन्नायकाः सकलराष्ट्रस्य भावात्मकैकतायाः सूत्रभूतस्य संस्कृतस्य प्रख्यात-प्रचारकाः संस्कृतप्रचारैकधनाः संस्कृतराष्ट्रेऽस्मिन् भारतीयसंस्कृतेः सशक्तसंरक्षकाः! स्वनामधन्या विद्वद्वरेण्याः भारतोदयस्य सम्पादकमहोदयाः!

सादरमभिवादनम्।

समधिगम्यते 'भारतोदयस्य' शोभनः प्रत्येकोऽङ्कः निरन्तरं पठित्वा च सुतरां तोतुष्यते मामकीनं मानसमिति। निसर्गतो भवादृशैर्विद्वद्भिः साम्प्रतिके काले संस्कृतप्रचार-प्रसारयोर्यादृशमनुष्ठानं विधीयते, तत्सर्वथा श्लाघनीयम् अनुकरणीयञ्च सर्वैः संस्कृतानुरागिभिः राष्ट्रभक्तैः।

वस्तुतः सम्प्रति विश्वरत्नस्य भारतवर्षस्य सनातन-धर्मस्य शाश्वत - संस्कृतेः संरक्षणार्थं संस्कृतस्य रक्षा प्रचारो वा परमावश्यकः। संस्कृतस्य प्रचारार्थं संस्कृतानुरागिषु प्रसारार्थं च संस्कृतसाहित्यान्तर्गतकठिनविषयस्य वाल्मीकि-कालिदासप्रतिपादित-सरल-सरस-संस्कृतशैल्यां वर्णनं प्रतिपादनं विवेचनं वा सर्वथा अत्यावश्यकं कार्यमिति मे मतिरिति।

इदमेव तथ्यं मनसि निधाय संस्कृतसाहित्यस्य सामयिकघटनायाश्च विविधं राष्ट्रियभावसमन्वितं

हरिद्वारस्थितस्य ज्वालापुरीय-गुरुकुलमहाविद्यालयस्य मुखपत्रम्

भारतोदयः (संस्कृत-मासिकम्)

P.O. गुरुकुलमहाविद्यालयः २४९४०४

हरिद्वारम् (उत्तराखण्डम्)

सेवायाम्,

श्री ____________

विषयमाधृत्य सुरभारत्याः प्रचारार्थं विविधविशिष्ट-संस्कृतपत्रिकासु प्रकाशनार्थं गद्यात्मिका पद्यात्मिका वा स्वकीया संस्कृतरचना सर्वदा सरलशैल्यामेव लिख्यते मया, इत्यत्र भवतामेव संस्कृतपरिवारायां सारस्वतमनीषिणां नैसर्गिकी प्रेरणा इत्यत्र नास्ति कश्चन विशंवादः।

- डॉ० शिवकुमारमिश्रः
उपाचार्यः संस्कृतविभागे
कुँवरसिंहमहाविद्यालयः, लहेरियासरायः
(ललितनारायणमिथिलाविश्वविद्यालयः)
दरभङ्गा-८४६००३ (बिहारप्रदेशः)

मुद्रकेण, प्रकाशकेन डॉ० हरिगोपालशास्त्रिणा ज्वालापुरीये 'अनुभव प्रिंटिंग प्रेस' मुद्रणालये मुद्रापयित्वा 'भारतोदयः' मासिकं पत्रं प्राकाश्यं नीतं हरिद्वारस्थितया ज्वालापुरीय-गुरुकुलमहाविद्यालयसभया।
सम्पादकः डा. हरिगोपालशास्त्री